श्चौलुक्यचक्रवर्त्ती ईप्सितं मनोऽभिलषितमैहिकामुष्मिकं फलं प्राप्नोतु-लभताम् । एवं विधाच्च सद्भूतस्तुतिस्तोमजन्यागण्यपुण्यप्रभावाद-भिलषितसिद्धिः स्तोतुः श्रोतुश्च सुलभैवेति समञ्जसम् ॥ ९ ॥

इति श्रीवीतरागस्तोत्रे विंशतितमस्याशीःस्तवस्य पदयोजना ।

## अवचूर्णि—विवरणकारस्य—

# प्रशस्तिः ।

चान्द्रे कुलेऽस्मिन्नमलश्चरित्रैः
प्रभुर्बभूवाभयदेवसूरिः ।
नवाङ्गवृत्तिच्छलतो यदीय-
मद्यापि जागर्त्ति यशःशरीरम् ॥ १ ॥

तस्मान्मुनीन्दुर्जिनवल्लभोऽथ
तथा प्रथामाप निजैर्गुणौघैः ।
विपश्चितां संयमिनां च वर्गे
धुरीणता तस्य यथाऽधुनापि ॥ २ ॥

तेषामन्वयमण्डनं समभवत्संजीवनं दुःषमा—
मूर्च्छालस्य मुनिव्रतस्य भवनं निःसीमपुण्यश्रियः।



श्रीमन्तोऽभयदेवसूरिगुरवस्ते यद्वियुक्तैर्गुणै—
र्दृष्टुंताद्दशमाश्रयान्तरमहो ! दिक्चक्रमाक्रम्यते ।३।

यतिपतिरथ देवभद्रनामा
समजनि तस्य पदावतंसदेश्यः ।
दधुरधरितभावरोगयोगा
जगति रसायनतां यदीयवाचः ॥ ४ ॥

तदीयपट्टे प्रतिभासमुद्रः
श्रीमान् प्रभानन्दमुनीश्वरोऽभूत् ।
स वीतरागस्तवनेष्वमीषु
विनिर्ममे दुर्गपदप्रकाशम् ॥ ५ ॥

एवं सपादशतयुतविंशतिशतपरिमितः प्रबंधोऽयम्।
लिखितः प्रथमादर्शे गणिना हर्षेन्दुना शमिना ॥६॥

शिवमस्तु ॥

इतिश्रीकलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रणीताः श्रीदेवभद्रमुनी-न्द्रशिष्यरत्नश्रीप्रभानन्दमुनीन्द्रोपज्ञदुर्गपदप्रकाशाख्य-विवरणोपेताः विंशतिः स्तवाः ॥

चश्चचन्द्रकुलाम्बरोदिततपापक्षाख्यबिम्बोल्लसन्
मार्त्तण्डोपमसोमसुन्दरगुरोः शिष्याग्रणीः सूरिराट्।
श्रीमानस्ति विशालराजसुगुरुर्विद्यानन्दीसागर-
स्तत्पादप्रणतोऽलिखं स्मृतिसखां जैनस्तुतेः पञ्जिकाम् १
सह पञ्चविंशदक्षरसपादषट्शतमिताजनिष्ट सुग-
मेयम् ।
वर्षे तिथिरविसंख्ये (शितिपक्षे) तपसि गुरुपुष्ये ॥२॥

इति विंशतिप्रकाशानां पञ्जिका समाप्ता ॥

इति श्रीवीतरागस्तोत्रं समाप्तम् ॥

इति श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ९५ ।



## ॥ विषयानुक्रमः ॥

# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फण्ड.




जव्हेरी बजार–मुंबई. संवत् १९७० ब्रान्च गोपीपुरा–सुरत.

६०००—८—२४.

धी न्यु लक्ष्मी प्रिन्टिंग प्रेस.
शाकगली मांडवी, मुंबई. ३.

श्रेष्ठिदेवचन्द्रलालभाई जैनपुस्तकोद्धारे ग्रन्थाङ्कः ६३.

बृहद्गच्छीयश्रीमद्वज्रसेनसूरिशिष्यश्रीहेमतिलकसूरिशिष्यश्रीरत्नशेखरसूरिवर्यविहितं

# श्रीश्रीपालचरित्रं ( प्राकृतम् )

सावचूर्णिकम्

प्रकाशकः—एतद्भांडागारिक एक कार्यवाहकः शाह जीवनचन्दसाकरभाइझवेरी

मुद्रयिता—भावनगरस्थानन्दयन्त्रालयाधिपतिः

वीरसंवत् २४५०. विक्रमसंवत १९८०. क्राइस्टसन १९२३.

प्रतयः १००० पण्यम् सपादो रूप्यकः आयत्ताः सर्वेऽधिकाराः संस्थायाः।